# अष्टमः सर्गः

स तस्य मध्ये भवनस्य संस्थितो महद्विमानं मणिरत्नचित्रितम्।
प्रतप्तजाम्बूनदजालकृत्रिमं ददर्श धीमान् पवनात्मजः कपिः।।5.8.1।।

तदप्रमेयप्रतिकारकृत्रिमं कृतं स्वयं साध्विति विश्वकर्मणा।
दिवं गते वायुपथे प्रतिष्ठितं व्यराजतादित्यपथस्य लक्ष्म तत्।।5.8.2।।

न तत्र किञ्चिन्न कृतं प्रयत्नतो न तत्र किञ्चिन्न महार्घरत्नवत्।
न ते विशेषा नियताः सुरेष्वपि न तत्र किञ्चिन्न महाविशेषवत्।।5.8.3।।

तपस्समाधानपराक्रमार्जितं मनस्समाधानविचारचारिणम्।
अनेकसंस्थानविशेषनिर्मितं ततस्ततस्तुल्यविशेषनिर्मितम्।।5.8.4।।

मनः समाधाय तु शीघ्रगामिनं दुरासदं मारुततुल्यगामिनम्।
महात्मनां पुण्यकृतां महर्द्धिनां यशस्विनामग्र्यमुदामिवालयम्।।5.8.5।।

विशेषमालम्ब्य विशेषसंस्थितं विचित्रकूटं बहुकूटमण्डितम्।
मनोऽभिरामं शरदिन्दुनिर्मलं विचित्रकूटं शिखरं गिरेर्यथा।।5.8.6।।

वहन्ति यत् कुण्डलशोभिताननाः महाशना व्योमचरा निशाचराः।
विवृत्तविध्वस्तविशाललोचना महाजवा भूतगणाः सहस्रशः।।5.8.7।।

वसन्तपुष्पोत्करचारुदर्शनं वसन्तमासादपि चारुदर्शनम्।
स पुष्पकं तत्र विमानमुत्तमं ददर्श तद्वानरवीरसत्तमः।।5.8.8।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे अष्टमस्सर्गः।।